भाष्यप्रकाशः ।

ण्यकवाक्ययोरविभागपरत्वस्यागत्या वक्तव्यतया तदेकवाक्यत्वेनेतरश्रुतेरपि तत्परत्वावधारणात् । अविभागो वचनात् इति सूत्रे व्यासैरपि वक्ष्यमाणत्वाच्चेत्याह ।

तत्र यदविरुद्धं तद् ग्राह्यम् । शेषे उदासीना वयम् ।

एवमस्मिन् पादे पदार्थान्तरेऽतिव्याप्तिवारणात् तल्लिङ्गाद्यधिकरणोक्तार्थप्रपञ्चनेनोपास-

रश्मिः ।

यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तं सुषुप्तस्थाने एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पाद इत्येकीभावो माण्डूक्योपनिषदि ।

'प्रज्ञानांशुप्रतानैः स्थिरचरनिकरव्यापिभिर्व्याप्य लोकान्
भुक्त्वा भोगान् स्थविष्ठान् पुनरपि धिषणोद्भासितान् कामजन्यान् ।
पीत्वा सर्वान् विशेषान् स्वपिति मधुरभुक् मायया मोहयन्नो
मायासंख्यातुरीयं परममृतमजं ब्रह्म यत्तन्नतोस्मि' ॥

इति च माण्डूक्ये । अगत्येति जीवब्रह्मप्रतीत्या मुक्तिप्रतीत्या चागतिस्तया । न चैक्यमस्त्विति शङ्क्यम् । छान्दोग्ये श्वेतकेतूपाख्याने यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसं गमयन्तीत्यत्राविभागोक्तेः अविभागाद्वैतान् निस्तिष्ठन्ति निष्पादयन्ति । नानेति नानागतीनां नानादिक्कानाम् । समवेति समाहृत्य एकतां मध्वात्मकताम् । इत्यविभागाद्वैतसिद्धेः । तत्परत्वेति अविभागाद्वैतपरत्वावधारणान्न त्वात्यन्तिकैक्यपरत्वावधारणात् । अविभागेति इदं फलाध्याये द्वितीयपादेस्ति जीवस्य मुक्तौ ब्रह्मणा सहाविभागः । यदविरुद्धमिति तत्रासङ्गं ब्रह्मेति विरुद्धम् । तस्य विरुद्धधर्माश्रयत्वात् । सेतुर्विधरण इत्यत्रैवोक्तेः पतनप्रतिबन्धकव्यापारस्य विधरणपदार्थत्वात् । द्वितीयसूत्रोक्तमविरुद्धम् । अजपदार्थो विरुद्धः अजपदस्यान्यार्थकत्वात् मोक्षादीनां संग्रहोऽविरुद्धः सद्योमुक्त्याद्यङ्गीकारात् । त्यक्तदेहेत्यादिकं विरुद्धम् । ब्रह्मैवसन्नित्यस्यांशस्य कूटस्थः सन्नित्यर्थात् । कोशखड्गयोरिति विरुद्धम् । सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते इति दृष्टान्तात् । इतरश्रुतेस्तत्परत्वावधारणं विरुद्धम् 'अविभक्तं च भूतेषु' इत्यत्र नञर्थानां षट्कात् ।

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः' ॥

अब्राह्मणः अपापमनश्वः अनुदरा कन्या अपशवो वा अन्ये गो अश्वेभ्यः अधर्म इत्युदाहरणानि । तल्लिङ्गादिति आदिपदेन दहराधिकरणं उपास्येति ज्योतिरधिकरणे ज्योतिः शरीरात् समुत्थिताधिकरणम् । नामरूपान्तर्वर्तित्वेन नामरूपाधाररूपोपास्यनिरूपकेत्यर्थः । तथा ब्रह्मप्रकरणमित्यस्मिन्नधिकरणे ब्रह्म सर्वाधिकरणं देशकालौ प्रकरणमिति देशकालरूपाधिकरणं च प्रत्यपादि । जीवे

भाष्यप्रकाशः ।

रूपनिरूपकवाक्यविचारादुपासनाधिकारिविचारपूर्वकं त्रयोदशाधिकरण्या आधाररूपो भगवान् विचारितः ॥ ४३ ॥

इति त्रयोदशं सुषुप्त्युत्क्रान्त्यधिकरणम् ॥ १३ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रकिरणनिवारितहृदयान्धकारेण पीताम्बरात्मजपुरुषोत्तमेन कृते ब्रह्मसूत्राणुभाष्यप्रकाशे प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥ १ ॥ ३ ॥

रश्मिः ।

ब्रह्माविर्भवतीति जीवरूपाधारोपि । आधारनिरूपके पादे तदुपर्यपीत्याद्यधिकरणतात्पर्यमाहुः उपासनेति । विचारित इति संगतिस्तूपोद्घातोग्रे पादे कथयिष्यते ॥ ४३ ॥

इति त्रयोदशाधिकरणम् ॥ १३ ॥

इति श्रीविद्वन्मण्डनश्रीगिरिधार्यात्मजश्रीदामोदरभ्रात्रीयेण श्रीगोविन्दरायपौत्रेण पूर्णवेत्रा श्रीविट्ठलरायभ्रात्रीयश्रीगोकुलोत्सवात्मजगोपेश्वरेण कृते भाष्यप्रकाशरश्मौ प्रथमाध्याये तृतीयः पादः संपूर्णतामगमत् ॥ १ ॥ ३ ॥



# मुद्रितपुस्तकानि ।

| | | |
|---|---|---|
| १ | सेवाफलम् । द्वादशविवरणसमेतम् । | [illegible] |
| २ | निरोधलक्षणम् । षड्विवरणसमेतम् । गुर्जरानुवादसमेतं च । | [illegible] |
| ३ | संन्यासनिर्णयः । अष्टविवरणसमेतः । गुर्जरानुवादसमेतश्च । | रु [illegible] |
| ४ | जलभेदः । चतुर्विवरणस. पञ्चपद्यानि । विवरणद्वयस. विवरणत्रययुतम् । सेवाफलम् । | रु [illegible] |
| ५ | भक्तिवर्धिनी । चतुर्दशटीकासमेता । | रु. [illegible]- ०-० |
| ६ | सिद्धान्तमुक्तावली । अष्टविवृतिसमेता । गुर्जरानुवादसमेता च । | रु. १- ०-० |
| ७ | सिद्धान्तरहस्यम् । एकादशविवरणसमेतम् । गुर्जरानुवादसमेतं च । | रु. १- ०-० |
| ८ | पुष्टिप्रवाहमर्यादा । चतुर्विवरणसमेता । | रु. १- ०-० |
| ९ | नवरत्नम्-पञ्चविवृतिसमेतम् । गुर्जरभाषानुवादसमेतं च । | रु. १- ०-० |
| १० | श्रीसुबोधिनी । दशम-पूर्वार्ध-तामस-फलप्रकरणम् अ. २६।३२ | रु. ३- ०-० |
| ११ | श्रीसुबोधिनी । दशम-पूर्वार्ध-राजस-प्रमेयप्रकरणम् अ. ४०।४६ | रु. ३- ०-० |
| १२ | श्रीसुबोधिनी । दशम-उत्तरार्ध-राजस-साधनप्रकरणम् अ. १।७ | रु. २- ०-० |
| १३ | श्रीसुबोधिनी । दशम-उत्तरार्ध-राजस-फलप्रकरणम् अ. ८।१५ | रु. २- ०-० |
| १४ | श्रीसुबोधिनी । दशम-उत्तरार्ध-सात्त्विक-प्रमेयप्रकरणम् अ. १६।२२ | रु. २- ०-० |
| १५ | श्रीसुबोधिनी । दशम-उत्तरार्ध-सात्त्विक-साधनप्रकरणम् अ. २३।३० | रु. १- ८-० |
| १६ | श्रीसुबोधिनी । दशम-उत्तरार्ध-सात्त्विक-फलप्रकरणम् अ. ३१।३६ | रु. १- ८-० |
| १७ | श्रीसुबोधिनी । दशम-उत्तरार्ध-गुणप्रकरणम् अ. ३७।४१ | रु. २- ८-० |
| १८ | श्रीमती टिप्पणी । श्रीमद्विठ्ठलेश्वरप्रणीता । | रु. २- ०-० |
| १९ | रासपञ्चाध्यायीप्रकाशः । श्रीपीताम्बरप्रणीतः अ. २६।३२ | रु. १- ०-० |
| २० | दशमतामसफलप्रकरणयोजना । श्रीलालूभट्टकृता अ. २६।३२ | रु. ०- ८-० |
| २१ | भागवतार्थनिबन्धः । प्रकाशावरणभङ्गसमेतः । आद्यस्कन्धद्वयम् । | रु. १- ०-० |
| २२-२५ | भावप्रकाशिका । ब्रह्मसूत्रवृत्तिः । श्रीकृष्णचन्द्रकृता । | रु. २- ४-० |
| २६ | प्रथमस्कन्धसुबोधिनीप्रकाशः । श्रीपुरुषोत्तमप्रणीतः । | रु. १- ०-० |
| २७ | वेदान्ताधिकरणमाला । श्रीमत्पुरुषोत्तमप्रणीता । | रु. १- ०-० |
| २८ | पत्रावलम्बनम् । श्रीपुरुषोत्तमकृतविवृतिसमेतम् । | रु. ०- ४-० |
| २९ | श्रीपुरुषोत्तमनामसहस्रम् । नामचन्द्रिकायुतम् । | रु. ०-१०-० |
| ३० | त्रिविधनामावली । टीकासमेता । | रु. १- ४-० |
| ३१ | तैत्तिरीयोपनिषद्भाष्यम् । श्रीजयगोपालभट्टकृतम् । गुर्जरानुवादयुतम् । | रु. १- ०-० |
| ३२ | श्रीमदणुभाष्यं प्रकाशरश्मियुतं प्रथमाध्यायस्य द्वितीयः पादः । | रु. ३- ०-० |
| ३३ | श्रीमद्भागवतम् । सुबोधिनीनिबन्धानुकूलगुर्जरभाषानुवादअधिकमासपर्यन्तं | रु. ५- ०-० |
| ३४ | प्रेमामृतम् । श्रीविठ्ठलेश्वरकृत.विवृतिसमेतम् ।<br>परिवृढाष्टकम् । श्रीगोपेश्वरकृतटीकासमेतम् । | रु. ०- ८-० |
| ३५ | शृङ्गाररसमण्डनम् । श्रीविठ्ठलेश्वरप्रकटितम् । गुर्जरानुवादसमेतम् । | रु. २- ८-० |
| ३६ | रसाब्धिमहाकाव्यम् । श्रीदेवकीनन्दनकृतम् । | रु. १- ०-० |
| ३७ | मनोदूतं हृदयदूतं च । गुर्जरानुवादसमेतम् । | रु. ०- ८-० |
| ३८ | श्रुतिरहस्यम्-सप्रकाशम्-गुर्जरानुवादसमेतम् । | रु. १- ०-० |
| ३९-४२ | श्रीमदणुभाष्यस्य प्रकाशरश्मिपरिबृंहितस्य तृतीयाध्यायः संपूर्णः । | रु. ५- ०-० |
| ४३-४४ | श्रीमदणुभाष्यस्य प्रकाशरश्मिपरिबृंहितस्य चतुर्थाध्यायः संपूर्णः । | रु. ४- ८-० |
| ४४-४७ | श्रीमदणुभाष्यस्य प्रकाशरश्मिपरिबृंहितस्य द्वितीयाध्यायः संपूर्णः । | रु. ६- ०-० |
| ४८-४९ | श्रीमदणुभाष्यस्य प्रकाशरश्मिपरिबृंहितस्य प्रथमाध्यायस्य भागद्वयात्मकः प्रथमः पादः संपूर्णः । ५० प्रथमाध्यायस्य तृतीयः पादः । | रु. ९- ०-० |
| 51 | Discuss how far S'ankarâchârya truly represents the view of the author of the Brahma-Sûtras. | Re. 1- 0-0 |
| 52 | An exam. of S'ankara's Refutation of Sânkhya Theory. | Re. 1- 0-0 |

पंडित गट्टूलालजीनी पाठशाला, केथिड्रलस्ट्रीट, भूलेश्वर, मुंबई.

